३ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २
चित्रं देवाना मुदगादनीकश्चक्षुर्मित्रस्य वरुणस्याऽग्नेः ।
२ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १— १२ ३ १
आ प्राद्यावा पृथिवी अन्तरिक्षꣳ सूर्य आत्मा जगतस्तस्थु-
२
षश्च ॥ ४ ॥
१— २२ ३ १ २ ३ १ २ ३२ ३ १ २ ३ १
आयङ्गौः पृश्निरक्रमीदसदन्मातरं पुरः । पितरञ्च प्रय-
२
न्त्स्वः ॥ ५ ॥
३ १ २ ३ २३ ३ १ २ ३ २ १२२ ३ १—
अन्तश्चरति रोचनास्य प्राणादपानती । व्यख्यन्महिषो
२१
दिवम् ॥ ६ ॥
३ २ ३ १ २ ३ १ २ ३ १ २ २ ३ २ ३
त्रिꣳशद्धाम विराजति वाक्पतङ्गाय धीयते । प्रतिवस्तो
२ ३ १ २
रहद्युभिः ॥ ७ ॥
२ ३ २ ३ १ २ ३ १ २ ३ १ २ १ २ ३ १
अपत्येता यवो यथा नक्षत्रायन्त्यक्तुभिः । सूराय विश्व
२
चक्षसे ॥ ८ ॥
१ २ ३ २ ३ २ ३ २ ३ २ ३ १ २ १ २ ३ १
अदृश्रन्नस्य केतवो विरश्मयो जनाꣳ अनु । भ्राजन्तो अग्न-
२
यो यथा ॥ ९ ॥
३१ २ ३ १ २ ३ १ २ २ ३ १ २
तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य । विश्वमाभासि रो-
३ २
चनम् ॥ १० ॥
३ २ ३ २ ३ १ २ ३ १— २२ ३ १ २ ३ २उ ३क
प्रत्यङ्देवानां विशः प्रत्यङ्ङुदेषि मानुषान् । प्रत्यङ्विश्वꣳ
२र ३ २
स्वर्दृशे ॥ ११ ॥
१ २ ३ १ २ ३ २ ३ २ ३ १ २ १ २ ३ १
येना पावक चक्षसा भुरण्यन्तञ्जनाꣳ अनु । त्वं वरुण प
२
श्यसि ॥ १२ ॥

१—२र   १ २ ३ २ ३ १ २   ३ १ २   २ ३ १ २
उद्यामेषि रजः पृथ्वहा मिमानो अक्तुभिः । पश्यञ्जन्मानि सूर्य ॥ १३ ॥

१ २   ३ २ ३ २ ३ २ ३ १ २   ३क २र   १ २ ३ १
अयुक्त सप्त शुन्ध्युवः सूरो रथस्य नप्त्यः। ताभिर्याति स्व-
२
युक्तिभिः ॥ १४ ॥

३ १   २ ३ २ ३ २ ३ १ २   ३ १ २
सप्त त्वा हरितो रथे वहन्ति देव सूर्य । शोचिष्केशं विचक्षण ॥ १५ ॥

सूर्यमुपस्थाय तर्पणं कुर्यात् । प्राङ्मुखः पातितदक्षिणजानुर्दक्षिणहस्ते धृतकुशत्रयः शुक्लैस्तिलैः कुशाग्रैर्देवतीर्थेन देवान् जलाशयात्प्रादेशमात्रहस्ताञ्जलिमुद्धृत्य तर्पयेत् ।

ॐ नमो ब्रह्मणे नमो ब्राह्मणेभ्यो नम आचार्येभ्यो नम ऋषिभ्यो नमो देवेभ्यो नमो वेदेभ्यो नमो वायवे च मृत्यवे च विष्णवे च नमो वैश्रवणाय चोपजाय च । इति कृताञ्जलिः पठित्वा अग्न्यादींस्तर्पयेत् । आदौ प्रणवमन्ते च तृप्यत्विति सर्वत्र योज्यम् । (१) ॐ अग्निस्तृप्यतु । ॐ प्रजापति० । ॐ विश्वेदेवास्तृप्यन्तु० । ॐ ॐकार० । ॐ वषट्कारस्तृप्य० । ॐ महाव्याहृतयस्तृप्यन्तु । ॐ गायत्री तृ० । ॐ ब्रह्मा तृ० । ॐ विष्णुस्तृ० । ॐ वेदास्तृप्यं० । ॐ देवास्तृप्यं० । ॐ ऋषयस्तृप्यं० । ॐ मुनयस्तृप्यं० । ॐ आचार्यास्तृप्यं० । ॐ पुराणानि तृप्यं० । ॐ छन्दांसि तृ० । ॐ यज्ञास्तृप्य० । ॐ अध्ययनं तृ० । ॐ द्यावापृथिव्यौ तृप्येताम् । ॐ अन्तरिक्षं तृ० । ॐ अहोरात्राणि तृप्यं० । ॐ मासास्तृप्यं० । ॐ ऋतवस्तृप्यं० । ॐ संवत्सरस्तृ० । ॐ वरुणस्तृ० । ॐ समुद्रास्तृप्यं० । ॐ नद्यस्तृं० । ॐ गिरयस्तृप्यं० । ॐ क्षेत्राणि तृप्यं० । ॐ वनानि तृ० । ॐ ओषधयस्तृप्यं० । ॐ वनस्पतयस्तृप्यं० । ॐ

(१) निरग्निश्चेत् 'तृप्यतु' इति पदस्थाने "तृप्यताम्" इति पदं एकवचनान्तं बहुवचनान्तं वा यथावसरं योजयेदिति विशेषः ।

पशवस्तृप्यं० । ॐ नागास्तृप्य० । ॐ उरगास्तृप्यं० । ॐ सुपर्णास्तृ० ॐ वयाᳬसि तृ० । ॐ गावस्तृप्यं० । ॐ वसवस्तृप्यं० । ॐ रुद्रास्तृ-प्यन्तु । ॐ आदित्यास्तृ० । ॐ मरुतस्तृ० । ॐ सिद्धास्तृ० । ॐ साध्यास्तृ० । ॐ गन्धर्वास्तृ० । ॐ पिशाचास्तृ० । ॐ यक्षास्तृ० । ॐ रक्षाᳬसितृ० । ॐ भूतानि तृ० । ॐ नक्षत्राणि तृ० । ॐ अश्विनौ तृप्येताम् । ॐ अप्सरसस्तृ० । ॐ चतुर्विधभूतग्राम० । ॐ मरीचि० । ॐ अत्रि० । ॐ अङ्गिरा० । ॐ पुलस्त्य० । ॐ पुलह० । ॐ क्रतु० । ॐ प्रचेता० । ॐ वसिष्ठ० । ॐ भृगु० । ॐ नारद० । ॐ सप्तर्षयस्तृप्यं० । ॐ अरुन्धती तृ० । एवमादयः एते मे स्वस्ति कुर्वन्तु तर्पिताः स्वस्ति कुर्वन्तु तर्पिताः ॥

एवमेकैकाञ्जलिना देवान्सन्तर्प्य, अपसव्येन दक्षिणाभिमुखः पातितवामजानुः पितृतीर्थेन द्विगुणदर्भैः कृष्णैस्तिलैः पितॄन्स्तर्पयेत् ॥

ॐकारो महाव्याहृतयो गायत्री ब्रह्मा वेदा देवा ऋषयः पितरश्छन्दाᳬस्याचार्यास्तृप्यन्ताम् । एवं त्रिः ।

ॐ राणायनिस्तृप्यतु । ॐ शाट्यमुग्रस्तृ० । ॐ व्यासस्तृ० । ॐ भागुरिस्तृ० । ॐ औगुण्डिस्तृ० । ॐ गौल्गुलविस्तृ० । ॐ भानुमानौपमन्यवस्तृ० । ॐ काराटिस्तृ० । ॐ मशको गार्ग्य० । ॐ वार्षगण्य० । ॐ कौथुमिस्तृ० । ॐ शालिहोत्र० । ॐ जैमिनि० । त्रयोदशैते सामगाचार्याः स्वस्ति कुर्वन्तु तर्पिताः स्वस्ति कुर्वन्तु तर्पिताः ॥

ॐ शटिस्तृ० । ॐ भाल्लवि० ॐ काल्लविस्तृ० । ॐ ताण्ड्य० । ॐ वृषाणक० । ॐ रुरुकि० । ॐ शमबाहु० । ॐ अगस्त्य० । ॐ बष्कशिरा० । ॐ हूहूस्तृ० । दशैते मे प्रवचनकर्त्तारः स्वस्ति कुर्व० ॥

ॐ कव्यवाळस्तृ० । ॐ नळ० । ॐ सोम० । ॐ यम० । ॐ

अर्यमा०। ॐ अग्निष्वात्तास्तृप्यन्तु। ॐ सोमपीथास्तृप्यं०। ॐ बर्हिषद्०। ॐ यम०। ॐ धर्मराज०। ॐ मृत्यु०। ॐ अन्तक०। ॐ वैवस्वत०। ॐ काल०। ॐ सर्वभूतक्षय०। ॐ औदुम्बर०। ॐ दध्न०। ॐ नील०। ॐ परमेष्ठी०। ॐ वृकोदरस्तृ०। ॐ चित्र०। ॐ चित्रगुप्त०।

अथ स्वपितृन्नामगोत्रपूर्वकं प्रतिपुरुषमञ्जलित्रयेण तर्पयेत्। अमुकगोत्र अस्मत्पिताऽमुकशर्मा तृप्यतु। एवमपरयोः। गोत्रा अस्मन्माता अमुकी देवीदा तृप्यतु। एवं तर्पणप्रयोगः। प्रथमं पित्रादिकांस्त्रीन्। ततो मात्रादींस्त्रिभिस्त्रिभिः। सपत्नजननीम्। एवमेव मातामहादिकांस्त्रीन्। एकैकाञ्जलिना तत्पत्नीः। स्वपत्नीं। तनयं, तनयाम्। ततः पितृव्यमातुलपितृव्यपत्नीमातुलपत्नीभ्रातॄन्, भ्रातृपत्नीं, पितृष्वसारं मातृष्वसारं भगिनीं तासामपत्यानि तत्पतींश्च श्वशुरं श्वश्रूं गुरुं शिष्य मित्रञ्च ( आप्तांश्च ) एतानेकैकाञ्जलिना तर्पयेत्।(१)

ततः सव्येनाचम्य कण्ठावलम्बिकृतोपवीतः कुशमध्यैः प्रत्यङ्मुखः शबलैस्तिलैस्तर्पयेत्॥

ॐ सनकस्तृ०॥ २॥ ॐ सनन्दनस्तृप्य०॥ २॥ ॐ सनातन०॥२॥ ॐ कपिल०॥ २॥ ॐ आसुरि०॥२॥ ॐ वोढु०॥ २॥ ॐ पञ्चशिख०॥ २॥

एतानञ्जलिद्वयेन तर्पयेत् प्रत्येकम्। ततोऽपसव्येन।

यत्र क्वचन संस्थानां क्षुत्तृष्णोपहतात्मनाम्।

---

(१) निरग्निकस्तु सर्वत्र देवपितृमनुष्यादितर्पणेषु देवादिनाम द्वितीयाविभक्त्यन्तं समुच्चार्यान्ते तर्पयामीति पदमुच्चार्य तर्पयेत्, अग्निं तर्पयामीत्यादि। कोकिलमते पितृपितामहप्रपितामहान्, मातृमातामहप्रमातामहान् प्रत्येकमञ्जलित्रयेण तर्पयेत्। स्त्रीणाञ्च सर्वत्रापितृगोत्रेण पृथक् तर्पणं, न तु सपत्नीकशब्देन। तच्च यथासंभवं अञ्जलित्रयरूपं एकाञ्जलिरूपं वा सर्वासां समानम्। इत्थञ्च तन्मते मातृत्रयमातामहत्रयस्थाने मातृमातामहप्रमातामहरूपमेकमेव त्रिकं ज्ञेयम्।

मातृवंशे मृता ये च पितृवंशे तथैव च ॥
तेषां हि दत्तमक्षय्यमिदमस्तु तिलोदकम् ॥ १ ॥

इति मन्त्रेणाञ्जलिं जलाद्बहिरुत्तरतो निःक्षिप्य, कुशांस्त्यजे न्मन्त्रेण—

येषां न पिता न भ्राता न पुत्रो नान्यगोत्रिणः ।
ते सर्वे तृप्तिमायान्तु मयोत्सृष्टैः कुशैस्तदा ॥ १ ॥

ततो—

ये चास्माकं कुले जाता अपुत्रा गोत्रिणो मृताः ।
ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीडनोदकम् ॥ १ ॥

इति मन्त्रेण जलाद्बहिः स्नानवस्त्रं निःपीड्याचम्य कुशांस्त्यक्त्वा, अन्यान् धृत्वा, सूर्यादिभ्योऽर्घं दद्यात् । ततो ऋष्यादीन् संस्मृत्य, शक्तश्चेत्तिष्ठन् हृदि तिर्यक्कृतकरः प्राङ्मुखो गायत्रीमष्टोत्तरशतं जप्त्वा सङ्कल्पं कुर्यात् । 'अनेन गायत्र्या मत्कृतेन जाप्येन रुद्रात्मा रविः प्रीयताम्' । "उत्तरे शिखरे जाता" इति विसर्जयेत् ।

ॐ उत्तरे शिखरे जाता भूम्यां पर्वतवासिनी ।
रुद्रेण समनुज्ञाता गच्छ देवि यथासुखम् ॥

ततो भासादि सामानि पठेत् । तेषामृष्यादयः । भासस्य वायुर्जगती सूर्यः । दशस्तोभस्य जमदग्निस्त्रिष्टुबग्निः । उन्नयेत्यस्यादित्योऽनुष्टुबात्मा । औशनस्य उशना गायत्र्यग्निः । शुद्धाशुद्धीययोरिन्द्रोऽनुष्टुबिन्द्रः । राजनरौहिणयोरिन्द्रस्त्रिष्टुबिन्द्रः । बृहत्साम्नो भरद्वाजो बृहतीन्द्रः । रथन्तरस्य वसिष्ठो बृहतीन्द्रेशानौ । सेतुसाम्नो विशोकस्त्रिष्टुबात्मा । महानाम्नीनां प्रजापतिर्विराडिन्द्रः । पुरीषपदानां पदपङ्क्तिर्वा । महादिवाकीर्त्यस्य सूर्यो जगती सूर्यः । ज्येष्ठसाम्नां प्रजापतिस्त्रिष्टुबग्निः । देवव्रतानां देवा उत्कृती रुद्रः । पुरुषव्रतानां पुरुषोऽनुष्टुप्पश्वानां गायत्र्यन्तिमा

२र २ ३र २र ३र २र ३र २ र

दशस्तोभम् ॥ हाउ २ हाउ । ओहा ।२। ओहा । हाओवा ।३। ऊ

— — २र १र र २र र १र

२।३। ओ २।३। हाउ वाक् ।३। आयुर्यन् ।३। ए आयुः ।३। आयुः

१ १ १ र र र — १ १ र

।३। वयाः ।२। वयः । इन्द्रन्नरो नेमधिताहवा २ न्तायि । यत्पा-

र र — १ र र र र — २र र

र्यायुनजतेधिया २ स्ताः । शूरो नृषाताश्रवसश्चका २ माइ । आगो-

र र — १ २र र ३र २र ३र २र

मति व्रजेम जातुवा २ न्नाः । हाउ २ हाउ । ओहा । २ । ओहा ।

र ३र र — — र १र र २र

हाओवा ।३। ऊ२।३। ओ २।३। हाउ वाक् ।३। आयुर्यन् ।३। ए

र १र १ ^ ३ ५र र

आयुः ।३। आयुः ।३। वयाः ।२। वा २। या २३४। औहोवा ।

२र र १र २ १ २ र १र र र ३ १ १ १ १

ए । आयुर्द्धा अस्मभ्यं वर्चोधा देवेभ्या २३४५ः ॥ २ ॥

१ २र १ २र १ र २ १ २ १

उन्नयम् ॥ उन्नयामि । होयि ।३। आदित्यं प्राश्वं यंत मुन्न

२र १ २ र र १र २र १ र २

यामि । होइ ।३। अहोरात्राण्यपरित्राणि । होयि ।३। द्यौर्नौर्होउ ।३।

१ र र र र २ १ र र र र २

तस्य। मसावादित्य ईयते हाउ ।३। तस्मिन्नवयमीयमान ईयामहे हाउ

१र र २ १र र २ २ऽ १र २ १

।३। इयामहे हाउ ।२। ईयामहे ३। हाउवा । प्रियेधाम२ स्त्रिय-

२ र १र र२ १ २ ३ १ १ १ १

क्षरे ।२। प्रियेधाम२ स्त्रियक्षरे २३४५ ॥ ३ ॥

४र ५ ४ १ २

गायत्री सामौशनम् ॥ प्रेष्ठंवाः । अता २३ यिथीम् ।

१ र २ १ २ १ २ २

स्तौषे मित्रम् । इव मा २३ याम् । अग्नायि रा ३ था ३ म् ।

१ २ १ ५ ५

नावा २३ हा ३४३यि । दा २३४यो ६ हायि ॥ ४ ॥

४र ५र ४ ५ ४ ५र ४ २ १ र २ १

शुद्धाशुद्धीये ॥ एतोन्विन्द्र२ स्तवा मा । शुद्ध२ शुद्धेनसा

२ १र र र २ १ २ १र २ १

२३ म्ना ।शुद्धैरुक्थैर्वा वृध्वा २३२ साम् । शुद्धैरा२३शी ३। र्वा

^ ३ २ ५र र ३ १ १ १ १
२ नु । ममा ३४ औहोवा । तू २३४५ ॥ ५ ॥

५र र ५ २ १ र २ १ — १
एतोन्विन्द्र२ंस्तवा ६ मा । शुद्ध२ं शुद्धे । न । साम्ना२ शुद्धा-
२ २ १र ^ ३ ५ १ १र
इ६ ३ कथा ३ इः । वावा२ध्वा २३४२ं साम् । शुद्धैरा २३
२ १ २ १ २ १
शी । वान्ममत्तु । इडा २३ भा ३४३ । ओ २३४५ इ । डा ॥६॥

१ ३र २र ३र २र
राजनम् ॥ हुम् ।३। हो ।३। ह२ं ।३। ओ हा ।३। औहोयि
३र २र ^ र २ १ २र ३ ४ ५ १ र
।२। औहोयि । इन्द्रन्नरो । ने ३ मधि । ताहवन्तायि ।३। वयो
२ १ र २ र १ २ र १र २ १ ^२ ३
बृहत् ।३। विभ्राष्टये विधर्मणे ।३। यत्पारियाः । युनज । तायिधि-
४ ५ २ १ र १ २र १र २
यस्ताः ।३। सत्यमोजः ।३। रजः सुवः ।३। शूरोनृषा । ता ३
१ ^२ ३ ४र ५ २ १ र २ १ र र
श्रव । सश्वकामायि ।३। भद्र२ं सुधा ।२। भद्र२ं सुधे । षमूर्जम् ।
र २र १र २ १र २र ३ ४ ५ २ १
इषमूर्जम् ।२। आगोमतायि । व्रजेभ । जातुवन्नाः ।३। बृहद्यशः
२ १ २ १ २ १ २ २ १र २ र र र
।३। दिविदधे ३ हम् ।२। दिविदधे ३। हाउवा । वागीडा सुवो
र २ ३ १ १ १ १
बृहद्भा २३४५ः ॥ ७ ॥

२र १ २ १ २ १
रौहिणम् ॥ हाउ ।३। आयिही ।३। आयिहिया ।३। आ-
२ १ २ १ २ १ र र
साउ ।३। आयाम् ।३। नामाः ।३। किट् ।२। इन्द्रन्नरो नेमधि-
र — १ र र र — १ र र र
ताहवा २ न्तायि । यत्पार्यायुनजते धिया २ स्ताः । शूरोनृषा
र — १ र र र र — १
ताश्रवसश्वका २ मायि । आगोमति व्रजेभ जातुवा २ न्नाः ।
१ र १ १ र
मना २३ होयि । प्राणा २३ होयि । चक्षू २३ होयि । श्रोत्रा

२३९ होयि । घोषा २३ होयि । व्रता २३९ होयि । भूता २३९
होयि । पाना २३९ होयि । चित्ता २३९ होयि । धीता २३९
होयि । सुवा २३ होयि । ज्योता २३ इहों २। वा २३४ औहोवा ।
ऊ २३४५ ॥ ८ ॥

बृहत् ॥ औहोयि त्वामिद्धि हवामहा ३ ए । साता वाजा ।
स्याकारा २३४ वाः । तुवा ३४ । औहोवा । वृत्राइ षुवाइ ।
द्रासा ३१ त् । पतिन्ना २३४ राः । त्वां काष्ठा ३४ । औहोवा ।
सू २ अर्वा २३४ । ताः । उहुवा ६ हाउ । वा । हस् ॥ ९ ॥

रथन्तरम् ॥ आभित्वा शूरनोनु मोवा । आदुग्धा इव धेन
व ईशानमस्य जगतः । सुवा २३ र्हशाम् । आइशानमा २३ इन्द्रा
३। तास्थू २३४ षा । ओवा ६। हाउवा । अस् ॥ १० ॥

पुरुषगति ॥ हाऊ ।३। सेतूं९ स्तर ।३। दुस्त । रान् ।३।
दानेनादानम् ।३। हाउ ।३। अहमस्मि प्रथमजा ऋता २३ स्या
३४५ । हाउ ।३। सेतूं९ स्तर ।३। दुस्त । रान् ।३। अक्रोधेन क्रो-
धम् ।३। अक्रोधेन क्रोधम् । हाउ ।३। पूर्वं देवेभ्यो अमृतस्य ना२३
मा ३४५ । हाउ ।३। सेतूं९ स्तर ।३। दुस्त । रान् ।३। श्रद्धया
श्रद्धाम् ।३। हाउ ।३। यो मा ददाति सइदे वमा २३ वा ३४५ त् ।
हाउ ।३। सेतूं ९ स्तर ।३। दुस्त । रान् ।३। सत्येनानृतम् ।३।

२र २ १ २ १ १ १ ऽ ऽ ऽ
हाउ ।३। अहमन्नमन्नमदन्तमा २३ श्री ३४५ । हाउ हाउ हाउ
२१ २र १ २ १ १ २ २र २
वा । एषा गतिः ।३। एतदमृतम् ।३। स्वर्गच्छ ।३। ज्योतिर्गच्छ ।३।
१र र २र १र २ १ १ १ १ १
सेतूँ स्तीर्त्वा चतुरा २३४५ः ॥ ११ ॥

— २ १र २ १ २र १
महानाम्न्यः ॥ ए २। विदामघवन्विदाः । गातुमनुशँ
२ २ ५ — १ र २ र र
सिषः । दाइशा ३१ उवा २३। ई ३४ डा । ए २। शिक्षा शचीनाम्प-
१ २र र १र — १ २ २ ५ २र १
ताइ । पूर्वीणाम्पुरू २। वसा ३१ उवा २३। ई ३४ डा । आभि-
— १ २ २ ५ १ र
ष्ट्वमभा २ यि । ष्टिभिरा ३१ उवा २३। इ ३४ डा । स्वर्नाँ शू
^ २ २ ५ १ र र २
२ः। हा ३१ उवा २३। ई ३४ डा । प्रा । चेतन प्रचेतया । इन्द्रा ।
१र — १ १ १ २ र १र १ २
द्युम्नायना २ इषा इ । इडा । इन्द्रा । द्युम्नाय० । अथा । इन्द्रा ।
२ १र १ र र र र र र २ २ २
द्युम्ना० । इडा । एवा हि शक्रो राये वाजाय वा १ श्री ३ वाः ।
२ १ २ ४ ५ २ १ २
शविष्ठ वज्रिन्ना ३। जासाइ । मँ हिष्ठ वज्रिन्ना २३ हो । जासा
१ १ १ १ १ १ २ १ — १
३१ उवा २३। इट्इडा २३४५। आया । हि पिबमा २ त्सुवा । इडा
१ १ १ १ — १र र र र १ र र र र
२३४५ । ए २। विदाराये सुवीरियाम् । भुवो वाजानाम्पतिर्वशा ँ
— १ २ २ ५ — १ २
२। अनुआ ३१ उवा २३ । ई ३४ डा । ए २। मँ हिष्ठवज्रिन्नृ-
१ १ र ^ २ २ ५
ञ्जसाइ । यः शविष्ठः शूरा २। णा ३१ उवा २३। ई ३४ डा ।
१र र ^ २ २ ५ १
यो मँ हिष्ठो मघोऽ २। ना ३१ उवा २३। ई ३४ डा । अँशुर्न-
र ^ २ २ ५ १ १ र
शोचा २ इः । हा ३१ उवा २३ । ई ३४ डा । चायि । कित्वो
र २ १र — १ १ २ १र
अभिनोनया । ईन्द्रो । विदेतमू २ स्तुहायि । इडा । ईन्द्रो । विदे-

— १ १ १ २ २१२ — १
तमू २ स्तुहायि। अथा। ईन्द्रो। विदेतमू २ स्तुहायि। इडा।
१२ २ २ २ २ २ २१२ २ ४
ईशो हि शक्रस्तमूतये हवा १ मा ३ हायि। जेतारमपरा ३। जायि-
५ १ १ १ २ १
ताम्। सनः स्वर्षदता २३ होयि। द्वाइषा ३१ उवा २३। इटू-
१११२ १२ २१ — १ १ ११११
इडा २३४५। क्रातुः। छन्दऋता २ म्बृहात्। इडा २३४५। ए
— १ २ २१ १२ २ २२ — १ २
२। इन्द्रं धनस्य सातयायि। हवामहे जेतारमपरा २। जितमा ३१
२ ५ — १ २ १ १
उवा २३। ई ३४ डा। ए २। सनः स्वर्षदतिद्विषाः। सा नः स्वर्ष-
— १ २ २ ५ १२
दता २ यि। द्विषआ ३१ उवा २३। ई ३४ डा। पूर्वस्य यत्त आ
— १ २ २ ५ २ १ २ ^ २
२। द्रिवआ ३१ उवा २३। ई ३४ डा। अꣳ शुर्मदाया २। हा
२ ५ १ १ २२ २ १ २
३१ उवा २३। ई ३४ डा। सू। म्न आधेहि नो वसाउ। पूर्त्तीः।
२१ — १ १ १२ २१ — १
शविष्ठशा २ स्यतायि। इडा। पूर्त्तीः। शविष्ठशा २ स्यतायि।
१ १२ २१ — १ १ १२ २ २
अथा। पूर्तीः। शविष्ठशा २ स्यतायि। इडा। वशी हि शक्रो नून-
२ २ २ २१२ २ ४ ५ १ २
न्तन्नव्यꣳ सा १ न्या ३ सायि। प्रभोजनस्यवा ३। त्राहान्। समर्येषु-
१ २ १ ११११ १ २
ब्रवा २३ होयि। वाहा ३१ उवा २३। इटू इडा २३४५। शूरो।
१२ २ — १ १ १ २ २१२ — १ १
यो गोषु गा २ च्छतायि। इडा। साखा। सुशेवो २ द्वयूः। इडा
११११ १ २ ३ २ १ ११११ १ १ २२
२३४५। आयिवा। हियेवा २३४५। होयि। हो। वाहा ३१
२ ५ १ २ १ ११११ १
उवा २३। ई ३४ डा। आयि वा। हियम्रा २३४५ यि। होयि।
१ २२ २ ५ १ २ १
हो। वाहा ३१ उवा २३। ई ३४ डा। आयिवा। हिइन्द्रा
११११ १ १ २२ २ ५ १
२३४५। होयि। हो। वाहा ३१ उवा २३। ई ३४ डा। आयि-

२ २ र १ १ १ १ १ १ १ २र २
वा । हिपूषा २३४५ न् । होयि । हो । वाहा ३१ उवा २३। ई
५ १ २ र र १ १ १ १ १ १ १ १ २र
३४ डा । आयिवा । हि देवा २३४५ः । होयि । हो । वाहा ३१
२ ५
उवा २३। ई ३४ डा ॥ १२ ॥

२र १र १र
महादिवाकीर्त्यम् ॥ हाउ ।३। आयुः ।३। ज्योतिः ।२।
३र २ ५र र २ १र र ३ १ १ १ १
ज्योता ३४। औहोवा । ए ३। वागूज्योति २३४५ः ॥ १३ ॥
२र र रि ३ ५र र २र
ज्येष्ठसामानि । एवाहियेवा २३४। औ होवा । हा१ हु१
२र ५र र २ र १ २ १ २ १
हा१ हु१ हु१ ३४ । औहोवा ।३। हि येवा । हियग्नायि । हिइन्द्रा ।
२ र १ २ र १ १ १ १ १
हिपूषान् । हिदेवा २३४५ः ॥ १४ ॥
२ र र १ ५ २ १ २ २ र र र
वयोमनोवयः प्राणाः । वयश्चक्षुर्वयः श्रोत्राम् । वयो घोषो
र १ २ १ र २ ५ १ १ १ १
वयो व्रताम् । वयो २३ भूताउ । वा ३। ई २३४५ ॥ १५ ॥
२ र १ १ २ ^३ ५ २ १र
वयो मना २३ः। होइ हौवाओ २३४ वा । वयःप्राणा २३ः।
१ २ ^३ ५ २ १ १ २ १र
होयि हौ वाओ २३४ वा । वयश्चक्षू २३ः । होयि० । वयः श्रोत्रा
१ २ ^३ ५ २ र १र १
२३ म् । होयि हौवाओ २३४ वा । वयो घोषा २३ः । होयि० ।
२ र १ १ २ ^ २ र १र १
वयोव्रता २३ म् । होयि हौवा० । वयोभूता २३ म् । होयि
२ ^ ३ ३ १ १ १ १
हौवाओ २३४५ वा ६५६ ॥ ऊ २३४५ ॥ १६ ॥
१ ^ र २ २ १९ १
ऊऽ२र्क् । हाउ ।३। हो ३ वाक् ।३। धर्मो २ धर्मः ।३। ॥१७॥
१ २ १ २ २ १ र२ २ १ २ २ १९ ० १९
धर्म विधर्म ।३। सत्यज्ञाय ।३। ऋतं वद ।३। हु१ वंव २ वंव
० १
२ वम् ।३। ॥ १८ ॥
२र र १र र २र र १र र २
औहौ होवा होयि ।२। औहौ होवा हा ३१ उ । वा २३ ।

३ ५ २ १२ २ १ २ २ १ २२ २ १२ २
भू २३४ वात् । विभ्राड्बृहत्पिबतुसोम्यम् । ध्वौ हौ होवा होयि ।
२१२ १२२ २२ २ १२ २ २ ३
औहौ होवा होयि । औ हौ होवाहा ३१ उ । वा २३ । जा २३४
५ १२ २ १ २ १ २१ १ २ २२ २ १२ २ २
नात् । आयुर्दधद्यज्ञपतावविह्रुतम् । औ हौ होवा होयि ।२। औ
२ १२ २ २ ३ ५ १२ २२ २ १२ २
हौ होवाहा ३१ उ । वा २३ । वा २३४ र्द्धात् । वातजूतोयो अभि-
१ २ १ २ २२ २ १२ २ २२ २ १२ २ २
रक्षतित्मना । औहौ होवा होयि ।२। औहौ होवाहा ३१ उ । वा
३ ५ २ १ २ १२ २ १ २२ २
२३ । का २३४ रात् । प्रजाः पिपर्ति बहुधा विराजति । औहौ
१२ २ २२ २ १२ २ २ — १ २ २२ १२
होवा होयि ।२। औहौ होवाहा ३१ उ । वा २ । अभ्राजीज्योति-
२ २ ३ १ १ १ १
रभ्राजी २३४५ त् ॥ १९ ॥

२२ २ १ २ १ २ ५२ २
भूमिः ।३। अन्तरिक्षम् ।३। द्यौः ।२। द्या ३४। औ होवा ।
२ २२१२ १ १ १ १
ए ३। भूताया २३४५ ॥ २० ॥

१२ २ १ २ १२ ३ २ २ ५२ २
द्यौः ।३। अन्तरिक्षम् ।३। भूमिः ।३। भूमा ३४। औ होवा ।
२ १२ ३ १ १ १ १
ए ३। आयुषे २३४५ ॥ २१ ॥

२२ १२ ३२ २ ५२ २ ३ १ १ १ १
हाउ ।३। ज्योतिः ।२। ज्योता ३४। औ होवा । ई २३४५ ॥२२॥

२२ २२ ^३ ४२ ५ २२ १२ २ १
हाउ ।३। आज्यदो हम् ।३। मूर्द्धानन्दाइ । वा ३ अर ।
^२ ३ ४ ५ २२ १२ २ १ २ २२ ३ ४ ५ २ १
तिम्पृथिव्याः । वैश्वानराम् । ऋतआ । जातमग्नीम् । कवि२ सम्रा ।
२ १ ^२ ३ ४२ ५ २२ १ २ १ ^२ ३ ४२ ५
जा ३ मति । थिञ्जनानाम् । आसन्नः पा । त्रा ३ ञ्जन । यन्तदेवाः ।
२२ ^२२ ३ ४२ ५ ^२ ३ ४ २२ २
हाउ ।३। आज्यदोहम् ।२। आज्यदो ५ हाउ । वा । ए । आज्य-
२ २ २२ २ १ ३ १ १ १ १
दोहम् ।२। ए । आज्यदोहा २३४५ म् ॥ २३ ॥

२र र १ २ २र१र २ १
हाउ ।३। हुम् । ।चिदोहम् ।३। मूर्द्धानन्दाइ । वा ३ अर ।
२ ३ ४ ५ २र १र २ १ र १र ३ ४ ५ २ १
तिम्पृथिव्याः । वैश्वानराम् । ऋतआ । जातमग्नीम् । कविँ सम्रा ।
२ २ ३ ४र ५ २र १ २ १ २ ३ ४र ५
जा ३ मति । थिञ्जनानाम् । आसन्नः पा । त्रा ३ ञ्जन । यन्तदेवाः।
२र र १ २ १ ९ २ २ ३
हाउ ।३। हुम् । चिदोहम् ।२। चिदो ३ । हाउ । वा ३। इ
१ १ १ १
२३४५ ॥ २४ ॥

२१ १ २ २र १र २ १ २
हाउ ।३। च्याहम् ।३। मूर्द्धानन्दाइ । वा ३ अर । ति० ।
२र १ २ ९ २ २ २ २ १
पूर्ववत् । हाउ ।३। च्योहम् ।२। च्यो ३ हाउ । वा ३। ए ३। ऋतम् २५
१ २ १ १ २ १ १ २ १ १ २१
आधिप । ताइ । मित्रप । ताइ । क्षत्रप । ताइ । स्वः पताइ ।
१ २ — — १ २ १ र २ १र र र २ १र २ १र २
धनपता २ इ । ना २ माः । मन्युना वृत्रहा सूर्येण स्वराड्य ज्ञेन म-
१ र २ १ २र १र २ १ र र र २ र १ २ १ र २ १ र २ १र
घवा दक्षिणास्य प्रिया तनुराज्ञा विशन्दाधार । वृषभस्त्वष्टा वृत्रेण
२ र १ २ १ र र २ १ २ १ २ १ र र २ र १ १ २ र
शची पतिरन्नेन गयः पृथिव्या स्तणिकोऽग्निना विश्वम्भूतम । भ्धमवो
र १ र र २ १र २ र र १र र २ १र र र र र १र
वायुना विश्वाः प्रजा अभ्य पवथावषट्कारेणाद्धभाक्सोमेन सोमपाः
२र र १र १र र २र र र २ १ २ १ र र २र र र र
समित्या परमेष्ठी।ये देवा देवाः । दिविषदः । स्थ तेभ्यो वो देवा दे
१र २र १ २ १र र २र र १ २ १ २ १ १ र २र १र
वेभ्यो नमः । ये देवा देवाः । अन्तरिक्ष सदः । स्थ तेभ्यो वो० । ये
र २र र र २ र १ २ १ र र २र १र र २र र र २
देवा देवाः । पृथिवीषदः । स्थ तेभ्यो वो० । ये देवा देवाः । अप्सु-
१ २ १ र र २र १र र २र र र २ १ २ १ र र २र
षदः । स्थ तेभ्यो वो० । ये देवा देवाः । दिक्षुसदः । स्थ तेभ्यो वो०।
१र र २र १ र २र र १ २ १ र र २र १ २ १ २ १र २
ये देवा देवाः । आशासदः । स्थ तेभ्यो वो० नमः । अवज्यामिव
१ २र १ र २ १ २र १ र र२ १ २ १ र १
धन्वनो विते मन्युञ्जयामसि मृड ताञ्च इह अस्मभ्यम् । इडा २३

२ १ र २ १ १ ३
भा। य इदं विश्वम्भूतम्। युयो ३। आउ। वा २३। ना
५
२३४ माः॥ २६॥

१ २ १ १ २ १ १ २ १ १ २ १
अधिप। ताइ। मित्रप। ताइ। क्षत्रप। ताइ। स्वःपताइ।
१ २ — — १ १ २ १ २र र १र २
धनपता २ इ। ना २ माः। नम उत्त तिभ्यश्चोत्तन्वानेभ्यश्च
१ र २र १ २र र १ २ १र २ २१ र२र
नमो निषङ्गिभ्यश्चोपवीतिभ्यश्च नमो स्यद्भ्यश्च म। तिद्धानेभ्यश्च
१ २ १ २ र १ २ १२ १ २ र १ २
नमः प्रविध्यद्भ्यश्च प्रव्याधिभ्यश्च नमः त्सरद्भ्यश्च त्सारिभ्यश्च
१ २र १र २ र १ २ १२ १ २ र १ २
नमः श्री। तेभ्यश्च श्रायिभ्यश्च नम स्तिष्ठद्भ्यश्चो पतिष्ठद्भ्यश्च
१ र २१र २ १र २ १ २१र २ १ २र १ २ १र २
नमो यतेच वियते च नमः पथे च विपथाय च। अव ज्यामिव
१ २र १ र २ १ २र १ र २ १ २ १ २ १
धन्वनोविते मन्युन्नयामासि मृड तान्न इह अस्मभ्यम्। इडा २३
२ १ र २ १ २
भा। य इदं विश्वम्भूतम्। युयो ३। आउ। वा २३। ना २३४
५
माः॥ २७॥

१ २ १ १ २ १ १ २ १ २ १
अधिप। ताइ। मित्रप। ताइ। क्षत्रप। ताइ। स्वः पताइ।
१ २ — — १ र र२ १ र २ र र १र
धनप ता २ इ। ना २ माः। नमोऽन्नाय नमोन्नपतय एकाक्षाय
२र र १र २ १ २र १ २१र २र १२र १ २१र २ १
चावपन्नादाय च नमो नमः। रुद्राय तीरसदे नमः स्थिराय स्थिर
२ र १ २ १ २र १ र २ २ १ २ र
धन्वने नमः प्रतिपदाय च पटरिणे च नमस्त्रियम्बकाय च क।
२ १ र २ १ २र र १र २ र र१र २ १ २ १र २
पर्दिने च नम आश्रायेभ्यश्च प्रत्याश्रायेभ्यश्च नमः क्रव्येभ्यश्च वि-
१र २ १ २ १ र १२र १ २ १र २ १ २र १ र
रिम्फेभ्यश्च नमः संवृते च विवृते च। अव ज्यामिव धन्वनोविते
२ १ २र १ र २ १ २ १ २ १ २ १
मन्युन्नयामसि मृड तान्न इह अस्मभ्यम्। इडा २३ भा। य इदं

२ २ १ ३ ५
विश्वम्भुतम् । युषो ३ । आउ । वा २३ । ना २३४ माः ॥२८॥
२१ २ २१ र
पुरुष व्रतानि। उहुवा हाउ । ३ । सहस्र शीर्षाः पुरु २३
२ २१ २१ २ १र २१र
पाः । सहस्राक्षः सहस्रा २३ पात् । सभूमिꣳ सर्वतो वा २३
२ १ २१र २ २१ २ २१९
र्त्वा । अत्यतिष्ठ दशाङ्गु २३ लाम् । उहुवा हाउ । २ । उहुवा
२ २ १ ११११
३ हाउ । वा ३ । इट् इडा २३४५ ॥ २९ ॥
२१ र २ — २१२र ५ २ १र र र
उहु वौ होवा २।३। त्रिपादूर्ध्व उदैत्पुरु २३ षाः । पादोस्ये-
र २१ २ १र २१ २ २ र
हा भवत्पु २३ नाः । तथाविश्वङ्वियक्रा २३ मात् । अशनान-
१र २ १र र — २१र १ ^ ३
शनेआ २३ भी । उहुवौ होवा २।२। उहुवौ । हो २। वा २३४।
५र र २ ५ २१र र — २१र ^
औहोवा । इ २३४ डा । उहुवौ होवा २। २ । उहुवौ । हो २ ।
२ ५र र ३ ५ २१र र —
वा २३४ । औहोवा । सु २३४ वाः । उहुवौ होवा २ । २ ।
२१र र ^ ३ ५र र ३ ११११
उहुवौ । हो २ । वा २३४ । औहोवा । ऊ २३४५ ॥ ३० ॥
१र र — १ रर २ १ र २
इयौ होवा २ ।३। पुरुष एवेदꣳ सा २३ वाम् । यद्भूतं यच्च
५र २ १२१५ र र २ २१र र २१
भावा २३ याम् । पादोऽस्य सर्वा भूता २३ नी । त्रिपादस्यामृत-
२ १र र — १र १ ^ ३
न्दा २३ इवी । इयौ होवा २ । २ । इयौ । हो २ । वा २३४ ।
५र र ३ ५ १र र — १र १ ^ ३
औहोवा । ई २३४ डा । इयौ होवा २ । २ । इयौ । हो २ । वा
५र र ३ ५ १र र — १र
२३४ । औहोवा । ज्यो २३४ तीः । इयौ होवा २ । २ । इयौ ।
१ ^ ३ ५र र ३ ११११
हो २ । वा २३४ । औहोवा । इ २३४५ ॥ ३१ ॥
२र १र र २ १ २ २र
हाउ । ३ । तावानस्य । महा २३ यिमा ३ । हाउ । ३ ।

१ र  र र  २ १र  र  २र  २ १र  १
ततो ज्याया२ श्च पूरू २३ षा ३ः । हाउ । ३ । उतामृतत्वस्ये-
२ २र  १ र र २ १र  २ २
शा २३ ना ३ः हाउ । ३ । यदन्नेनातिरोहा२३ ती ३ । हाऽ
२ १ १ १ १ १
उ । ३ । वा ३ । इट् इडा २३४५ ॥ ३२ ॥

२  १ र २ १र २र  २  २ १र
हाऽ उ ३ वा । ततो विराडजायत । हाऽउ ३ वा । विरा-
२र १ २ १र २  २  १ २र १र  र  २
जो अधिपूरुषः । हाऽउ ३ वा । स जातो अत्यरिच्यत । हाऽउ ३
२ १र र २ १ र २ १  र  १ १ १ १
वा । पश्चाद्भूमिमथो पुरः । हाऽउ ३ वा ३ । ई २३४५ ॥३३॥

२र  १ २ १ २  १ २ १ २
हाउ । ३ । अस्मिनस्मिन् । ३ । नृम्णाइ नृम्णम् । ३ ।
१  २  २ र  १ २  र र
निधाइमाहे । ३ । कयानश्चित्रा ३ आभू १ वा २ तू । ऊती स-
र  १  २ र  १ २
दावृ ३ धाः सा १ खा २ । कया शचिष्ठा ३ यावा १ र्ता
२र  १ २ १ २  १ २ १ २
२३ । हाउ । ३ । अस्मिनस्मिन् । ३ । नृम्णाइ नृम्णम् । ३ ।
१ २ १  १ ^ ३  ५र र  १
निधाइमाहे ।२। निधा २३ यि । मा २ । हा २३४ औहोवा । सुव-
र ३ १ १ १ १
र्ज्योति २३४५ः ॥ ३४ ॥

२र  १
तथद्यावीयम् ॥ हाउ । ३ । ऊ २ । ३ । हुऊ २ । ३ ।
१ २  १ २ ऽ २  २  १  १ १ १ १
इया हाउ । २ । इया ३ हाउ । वा ३ । इट्इडा २३४५ ॥ ३५ ॥

२  २ १  २ १  २र २१ र२र  १ र
हाऽउ ३ वा । अग्निरस्मि जन्मना जातवेदाः । इडा । सुवः ।
१ र  २  २र २र१ २१ २ र १  १ र  १
इडा । हाऽउ ३ वा । घृतं मेचक्षुरमृतं म आसन् । इडा । सुवः ।
र  २  २ १र २१र  २र १र २  १ र  १
इडा । हाऽउ ३ वा । त्रिधातुरर्को रजसो विमानः । इडा । सुवः ।
१ र  २  १ २  १र २१  २ १ २  १ र
इडा । हाऽउ ३ वा । अजस्रं ज्योतिर्हविरस्मि सर्वम् । इडा ।
१  १ र
सुवः । इडा ॥ ३६ ॥

२र २र र १ र २
हाउ । ३ । पात्यग्निर्विपो अग्रं पद वेः। हा ३१ उवा २३।
३ ५ २ २ ३ ५
सू२३४ वाः । इह । हा ३१ उवा २३ । ज्यो २३४ तीः ।
२र २र र १ २ २
हाउ । ३ । पाति यह्वश्चरणँ सूरियास्या । हा ३१ उवा
३ ५ २ २ ३
२३ । सू२३४ वाः । इह । हा३१उवा२३ । ज्यो२३४
५ २र २र र र र र१ २ २
तीः । हाउ । ३ । पातिना भा सप्तशीर्षाणमाग्निः । हा३१उवा-
३ ५ २ २ ३ ५
२३ । सू२३४वाः । इह । हा३१उवा२३ । ज्यो२३४तीः ।
२र २र र र र र१ २ २ ३
हाउ । ३ । पाति देवानामुपमादमार्ष्वः । हा३१उवा२३ । सू२३४
५ २ २ ३ ५
वाः । इह । हा३१उवा२३ । ज्यो२३४तीः ॥ ३७ ॥
१ — १ २ २१ २ १
इया २। ३ । इया हाउ। ३ । इन्द्रं नरो । ने ३ माधि ।
२र ३ ४ ५ २ १ २र ३र २ १ र २ १
ताहवन्ताइ । हवन्ते ३ । हँहँहाँहाँहँ। ३ । हवन्ते । ३ । यत्पा-
२ १ २ ३ ४ ५ २ १ २र ३र २
रियाः । युनज । तायिधियस्ताः । धियस्ता ३ः । हँहँहाँहाँहँ
२ २र१र २ १ २ ३ ४र ५
। ३ । धियस्ताः । ३ । शूरोनृषा । ता ३ श्रव । सश्चकामायि ।
२ र १ २र ३र २ १ र र २र१र
चकामे ३ । हँहँहाँहाँहँ । ३ । चकामे । ३ । आगोमतायि ।
२ १र २र ३ ४ ५ २ १ २र ३र २
व्रजेभ । जातुवन्नाः । तुवन्ना ३ः । हँहँहाँहाँहँ । ३ ।
१ १ — १ २ १ २ १ ऽ २
तुवन्नः । ३ । इया २ । ३ । इया हाउ । इयाहाउ । इया ३ हाउ ।
र र१ र १
वा । ए । व्रतमेसुवरे शकुनः ॥ ३८ ॥

२र र १ २ १र र २ —
भ्राजा औहोहो हायि । त्यग्ने समिधानादी १ दिवा २ः ।

र र १ २ १ २ — र र
जिव्हा औहोहोहायि । चरत्यन्तारा १ सानी २ । सत्वा औ-
१ २ १ र र २ १
हो हो हायि । नो अग्ने पयसावसू ३ वीत् । रयिं वर्चो
२ ३र २ १ — १ २ ४ ५ ४
दृशौहो ३ । हुम्मा २ । दा । औ ३ होवा । हो ५ इ । डा ॥३९॥
१ र १ र १ २ १ २ १ २ १र
[ ॐभूः । ॐ भूमिर्दिवमन्तरिक्षम् । ॐभुवः । ॐऋचो यजू२
२ र १ २ १ र र र २ १ १ १ १ २१ १र र र
षि सामानि । ॐ भार्गो देवस्य धीमाही ३४५ । ॐ प्राणोऽपानो
र र २ र १ २ १र र २ १ १ १ १ १
व्यानः समान उदानः । ॐ धियो योनः प्रचो ३४५ । ॐमहः । ॐ
१ १ १ १ २१र र २ १
जनः । ॐ तपः । ॐ सत्यम् । ॐ पुरुषाः । ॐ पुरोरजो अमृतोम् ।
२ १ १ १ १ — १ २ १ १ १ र
ॐ ह५ ३४५ । हुम् । आ २ । दायो । आ ३४५ । ॐ भूमिरन्त-
२ १र र १ १ ^ २र २
रिक्षं द्यौः । ॐ तत्सवितुर्वरेणियोम् । ॐ उऽ २ कूं । हाउ । ३ । होऽ
२ १ र र २ १ १ ^ २र
३ वाक् । ३ । ॐ ऋचोयजो अमृतोम् । ऊ २ कूं । हाउ । ३ ।
२ २ १ २र१र र र र र र २ १ २ १र
हो ३ वाक् । ३।३। ॐ प्राणोऽपानो व्यानः समान उदानः । धियो
र २ १ १ १ २ १ ^ २र २
योनः प्रचो ३४५ । ॐ ऊऽ २ कूं । हाउ । ३ । हो ३ वाक् । ३ ।
१ ऽ २ १२ १ २ २ १ र २ २ १
धर्मो २ धर्मः । ३ । धर्म विधर्म । ३ । सत्यं गाय । ३ । ऋतं
२ २ १९ १ ९ १
वद । ३ । ह५ वंव २ वं व २ वम् । ३ । ॥४० ॥]

तवश्यावीयं प्रयुञ्जानः शुचिः पूतो ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्त्तते न च पुनरावर्तते ।

१ र २ ३ १र २ १ र र २र १
सन्त्वा भूतान्यैरयन् । होयि । सन्त्वाभव्यान्यैरयन् । होयि ।
१ र २ १ र ९ १ १ र २र २
सन्त्वा भविष्यदैरयत । होयि । सन्त्वा भुवनमैरयत् । होयि ।
१ र २र१ २ १
सन्त्वा भूतमैरयत् । होयि ॥ १ ॥

१ —१ १ —१ १ —१ १
उवी २उवि। उविहो २ उवि। ३। इती २ इति। इति
—१ १ —१ १ —१ १२
हो २ इति। ३। असी २ असि। असिहो २ आसि। ३। अरु·
२२ १ २ १२ १ —१ १ —१
रुचो दिवं पृथिवीम्। असी २ असि। असि हो २ आसि। ३।
१ २ २१२२ २२ ९ १ १२ ३ ५
पतिर। स्यपामोषधीना ३ म्। ओयि। पतायिरा २३४ सी। ३।
१ २२१२२२ १ २२ १ २ २ १ २२२ २१२२ २ १
चायि। त्रं देवाना मुदगादनीकम्। वायि श्वेषां देवानाँ२ समि·
७ १२ २ १२ ९ १ १२ १
दजस्र ज्योतिराततरम्। होयि। ३। आयुर्यन्। ३। अन्नः। ३।
१ २१ २ १ २ २१२ २ ३ २
चक्षुर्मित्रस्य वरुणस्याग्नेः। सुवः स ँ२ सर्पस ँ२ सार्पा। ३।
२१२ —१ १ —१ — १
जनावन ँ२ सुवा २ स्सुवः। जना २ वना २ म्। सुवा २ः
१ १२ २२ २ २ ७ २ २
सुवः। ३। आ प्राद्यावा पृथिवी आन्तरि २ ३क्षा२म्। सूपिप्र·
२२२ २ २ २ २२२ २२ २ २
सृपीऐही। ३। अस्तोषतस्वभानवाऐही। विप्रानविष्ठ्यामता
२२ २२२ २ २२ २ २
ऐही। ग्रावाणो बर्हिषि प्रिया ऐही। इन्द्रस्यर ँ२ हियं बृहा·
२२ १ — १ — १ — २
दैही। इन्द्रा २। स्यरा २। हिया२म्। बृहदिन्द्रस्यर ँ२
२ २२ १२ २ २ ७ २
हियं बृहा दैही। ३। सूर्य आत्मा जगस्तास्थुषा २३ श्चा ३।
२ २ २ २२ २२२२२२
अन्तश्चरति रोचना ऐही। ३। अस्य प्राणादपानता ऐही
२ २ २२२ १२ २२ १२ २२
। ३। व्यख्यन्महिषो दिवामैही। ३। प्रो एति प्रो एति। ३।
१ २२ १ २२ १ २ २ ५२ २ २
प्रो। एति। प्रो। एति। प्रो २३। एता ३४ औहोवा। ए ३।
२२१२ २ २ ३ १११
देवा दिवा ज्योती २३४५ः॥ २॥
१ ९ १ ९ १ २ २
उवी २।३। हिगी २।३। हिगिगि। ३। आयङ्गौः पृश्निर·

२ २ २ २ २ २ २ २
क्रमीदैही । ३ । असदन्मातरं पुरा ऐही । ३ । पितरं च प्रयं
२ ८ २ १ ९ १ ९ १ २
स्त्वा ऐही । ३ । उवी २ । ३ । हिगी २ । ३ । हिगिगि । ३ । ॥ ३ ॥
२ १ २ १ २ १ २२ २
उवी । ३ । हिगी । ३ । हिगिगी । ३ । आयङ्गौः पृश्निर-
२ २ २ २ २ २ २ २ २ २ २ २
क्रमीदैही । असदन्मातरं पुरा ऐही । पितरञ्च प्रयन्त्स्वाऐही ।
२ १ २ १ २ १
उवी । ३ । हिगी । ३ । हिगिगी । ३ ॥ ४ ॥

२२ २ २̂ ३२ २२ ३२ २ २ २ २ १
हाउ हाउ हाउ । आजा ओवा । ३ । उदुत्यञ्जा । ३ । चित्रं
२ २ २ ७ २ २२ २ २̂ ३२ २२ ३२ २
देवानामुदगादनी २३ का ३ म् । हाउ हाउ हाउ । आजाओवा
२२ १ ७ २
। ३ । तवेदसम् । ३ । चक्षुर्मित्रस्य वरुणास्य आ २३ ग्ना ३
२२ २ २̂ ३२ २२ ३२ २ २२ २ १२ २
यिः । हाउ हाउ हाउ । आजाओवा । ३ । देवंवहा । ३ । आप्रा-
२ २ २ ७ २ २२ २ २̂ ३२ २२
द्यावा पृथिवी आन्तरी २३ क्षा ३ म् । हाउ हाउ हाउ । आजा-
३२ २ २ २ १२ २ २ ७ २
ओवा । ३ । निकेतवः । ३ । सूर्य आत्माजगतस्तास्थुषा २३ श्चा
२२ २ २̂ ३२ २२ ३२ २ २ २ २ १२
३ । हाउ हाउ हाउ । आजाओवा । ३ । दृशेविश्वा । ३ । सूर्य
२ २ ७ २ २२ २ २̂ ३२ २२ ३२
आत्मा जगतस्तास्थुषा २३ श्चा ३ । हाउ हाउ हाउ । आजाओ-
२ २२ १ २ २
वा । ३ । यसूर्यम् । २ । यसू २३ रियाउ । वा ३ । ए ३ ।
२२ ३२ २ २ ३ १ १ १ १
देवादिवा ज्योती २३४५ः ॥ ५ ॥

२२ १ १ २२ १ २ २२ २ १२ २ २२
हाउ । ३ । सहो भ्राज । २ । सहोभ्राजा । पोभ्राजा ।
१२ २ २२ १२ २ २ १ २ २२ ३ २२ २ १
पोभ्राजा । पोभ्राज । अभ्राजीत् । ३ । व्यभ्राजीत् । ३ । अदि-

२ १ र र — १
द्युतत् । ३ । अदिद्युतद्विश्वम्भुत ५ महोबृ २ हात् । अदिद्युत
र — १ र ५ — १ १
दभ्राद् भ्रा २ भ्राद् । आदिद्युतद् घर्मो अरु रु २ चात् । अदिद्युत-
र र — १ ५र १ र २र १ र
द्धर्मउषसो अरोचा २ याः । हाउ । ३ । सहोभ्राज । २ । सहो-
र २र १र र २र १र र २र १र र र १ र २र १
भ्राजा । पोभ्राजा । पोभ्राजा । पोभ्राज । अभ्राजीत् । ३ । व्य-
र २र १ २ १ २ २ र
भ्राजीत् । ३ । आदेद्युतत् । २ । अदिद्युता ३ त् । हाउवा । ए ।
१ २ १र २र १ र २ १ र २र १ २र ३ १ १ १ १
अदिद्युतद्धर्मो अरुरुचदुषसान्दिवि सूर्यो विभाती २३४५ ॥ ६ ॥
१र र र र र र ५ र र र २ ५
औहो औहोवा । होयि । २ । औहो औहोवा । हा ३१ उ । वा
३ ५ ५ १ २ र १र १र र र र र
२३ । भू २३४ वात् । अन्तश्चरतिरोचना । औहो औहोवा ।
१ १र र र र र २ १ ३
होयि । २ । औहो औहोवा । हा ३१ उ । वा २३ । जा २३४
५ २ १ २५ १र २र १र १र ५ र र र १ १र ५
नात् । अस्य प्राणादपानती । औहो औहोवा । होयि । २ । औहो
र र र २ १ २ ५ १ २
औहोवा । हा ३१ उ । वा २३ । वा २३४ र्द्धात् । व्यख्यन्महि-
१र र र र र र र र र र र २
षोदिवम् । औहो औहोवा । होयि । २ । औहोऔहोवा । हा३१
१ ३ ५ १र र र र र १ र र
उ । वा २३ । का२३४रात् । औहोऔहोवा । होयि । २ । औहो औ
र र २ १ ३ ५ १र र र र र १
होवा । हा ३१उ । वा२३ । भू२३४तीः । औहो औहोवा । होयि । २ ।
र र र र र २ — १ र २र १र २ ५ र
औहो औहोवा । हा३१उ । वा २ । अभ्राजीज्योतिरभ्राजीत् ।
१५ र र र र १ र ५ र र र २
औहो औहोवा । होयि । २ । औहो औहोवा । हा३१उ । वा
२ १ र र र२र र१ ३ १ १ १ १
२३ । ए ३ । सर्वान्कामानशीमही २३४५ ॥ ७ ॥

२ ऽ १ २ ३र २र ३र र २र र
हाऽउ३वा । इन्दुः । भ्राजा ओवा । ३ । आयङ्गौः पृश्निरक्र

र १ १ २ऽ १ २ ३२ २२ ३२ र २ र
मीदेही । हाऽउ३वा । इडा । आजा ओवा । ३ । असदन्मातरम्पु

र र र २ऽ १ २र ३र २र ३र २ २
रा ऐही । हाऽउ३वा । सात्यम् । आजा ओवा । ३ । पितरञ्च

र र र २ऽ १ २
प्रयन्त्स्वा ऐही । हाऽउ३वा । दीर्घौः ॥ ८ ॥

२ ऽ १ २ ३र २र ३र र २ र र
हाउऽ३वा । भूतम् । आजा ओवा । ३ । अन्तश्चरतिरोचना

१ र २ऽ १ २र २र २र ३र र २ र र र
ऐही । हाऽउ३वा । पृथिवी । आजा ओवा । ३ । अस्यप्राणादपा-

र र र २ऽ १ २ ३र २र ३र र २
नता ऐही । हाऽउ३वा । साहः । आजा ओवा । ३ । व्यख्यन्महि-

र २ र र २ऽ १ २
षो दिवामैही । हाऽउ३वा । तेजः ॥ ९ ॥

२ ऽ १ २ ३र २र र र २ र र र
हा उ३वा । आपः । आजा ओवा ।३ । त्रिंशद्धाम विराजता

र र २ऽ १ २ ३र २र ३र र २र र र
ऐही । हाऽउ३वा । ऊषा । आजा ओवा । ३ । वाक्पतङ्गायधीय-

र र र २ऽ १ २ ३र २र ३र र २ र
ता ऐही । हाऽउ३वा । दीक्षः । आजा ओवा । ३ । प्रतिवस्तोरहद्यु-

र र र २ऽ १ २
भा ऐही । हाऽउ३वा । ज्योतिः ॥ १० ॥

२ १ र र २र १ २ १र र र २र
उर्वंल्लोकान रोचयः । हौयि । इमांल्लोकानरोचयः ।

१ २ १र र २र १ १ २र १ २र १ २
हौयि । प्रजा भूतमरोचयः । हौयि । विश्वम्भूतमरोचयः । हो२हा

५र र २ १र र ३ १ १ १ १
२३४ औहोवा । घर्मोज्योती २३४५ः ॥ ११ ॥

२र र २ ३र २र ३र र २ र १ २ १
हाउ हाउ हाउ । आजा ओवा ।३। दिदीहि विश्वतस्पृथुः ।

२ र १ २ — २र १ २
उदुत्यञ्जाता ३ वाइदाऽ १ सार२म् । देवं वहन्ती ३ कायिताऽ १
— २र र १ २ — २ र र १
वा २ः । दृशे विश्वाया ३ सूराऽ१ यार२म् । अपत्ये ताया ३ वो
२ — २ र १ २ — २
याऽ १ था २ । नक्षत्रायन्ती ३ या क्तूऽ १ भार२यिः । सूराय-
१ २ — १ २
विश्वा ३ चाक्षाऽ १ सार२यि । अदृश्रन्नस्या ३ कायिताऽ १
— २ र १ २ — र र
वा २ः । विरश्मयोजा३ना ४ँ आऽ १ नू २ । भ्राजन्तो अग्ना ३
१ २ २र र रे ३र २र ३र र ३र र
योयाऽ१ था २३ । हाउ हाउ हाउ । भ्राजा ओवा । २ । भ्राजा ३
४ ३ १ १ १ १
ओ५वा ६५६ । ई २३४५ ॥ १२ ॥

२र र रे २ २र ३र र २ र १ २ १
हाउ हाउ हाउ । शुक्रा ओवा । ३ । दिदीहि विश्वतस्पृथुः ।
२ र १ २ — २र १ २
उदुत्यञ्जाता ३ वाइदाऽ १ सार२म् । देवं वहन्ती ३ कायिताऽ १
— २र र १ २ — २ र र १
वा २ः । दृशे विश्वाया ३ सूराऽ१ यार२म् । अपत्ये ताया ३ वो
२ — २ र १ २ — २र र
याऽ १ था २ । नक्षत्रायन्ती ३ या क्तूऽ १ भार२यिः । सूराय-
१ २ — २ १ २
विश्वा ३ चाक्षाऽ १ सार२यि । अदृश्रन्नस्या ३ कायिताऽ १
— २ र १ २ — र र
वा २ः । विरश्मयोजा३ना ४ँ आऽ १ नु २ । भ्राजन्तो अग्ना ३
१ २ २र र रे ३ २र ३र र
योयाऽ१ था २३ । हाउ हाउ हाउ । शुक्रा ओवा । २ ।
३ २ ४ ३ १ १ १ १
शुक्रा ३ ओ ५ वा ६५६ । ई २३४५ ॥ १३ ॥

२र र रे ३र२र ३र र २ र १ २ १
हाउ हाउ हाउ । भूता ओवा । ३ । दिदीहि विश्वतस्पृथुः ।
२ १ २ — २र १ २
तरणिर्विश्वा ३ दार्शाऽ १ ता २ः । ज्योतिष्कृदसी ३ सूराऽ १
— २ र र १ २ — २ र १ १
या २ । विश्वमाभासी ३ रोचाऽ १ नार२म् । प्रत्यङ्देवा ३ नां-

२ — २ र ३ २ — २
वाऽ१ यिशा २ः। प्रत्यङ्ङुदेषी३मानू १ षा२न्। प्रत्यङ्ङ्विश्व२ँ
१ २ — र र र १ २ — २
सु३र्वार्दृऽ १शा२यि।। येनापावका३चाक्षाऽ १ सा २। भुरण्यन्तञ्जा
१ २ — २ १ २ २र र
३ना२ँआऽ१ नु २। त्वंवरुणा३पा३याऽ१सा२३यि। हाउ हाउ
२ ३र २र ३र र ३र २ ४ ३ १ १ १ १
हाउ। भूर्ता ओवा। २। भूता ३ओऽ५वा ६५६। ई २३४५॥१४॥
२३ र र ३र २र ३र र २ र १ २ १
हाउ हाउ हाउ। तेजा ओवा। ३। दिदीहि विश्वतस्पृथुः।
२ १ २ — २र १ २
तरणिर्विश्वा ३ दार्शाऽ १ ता २ः। ज्योतिष्कृदमी ३ सूराऽ १
— २ र र १ २ — २ र ९ १
या २। विश्वमाभासी ३ रोचाऽ १ ना२म्। प्रत्यङ्ङ्देवा ३ नां-
२ — २ र १ २ — २
वाऽ१ यिशा २ः। प्रत्यङ्ङुदेषी३मानू १ षा२न्। प्रत्यङ्ङ्विश्व२ँ
१ २ — र र र १ २ — २
सु३र्वार्दृऽ १शा२यि। येनापावका३चाक्षाऽ १ सा २। भुरण्यन्तञ्जा
१ २ — २ १ २ २र र
३ना२ँआऽ१ नु २। त्वंवरुणा३पा३याऽ१सा२३यि। हाउ हाउ
२ र ३र २र ३र र २र २र ४ ३
हाउ। तेजा ओवा। २। तेजा ३ ओऽ५ वा ६५६। ई
१ २ १ १
२३४५॥ १५॥

२र र र ३ २र ३र र २ र १ २ १
हाउ हाउ हाउ। सत्या ओवा। ३। दिदीहि विश्वतस्पृथुः।
२ र र १ २ — २ र र १ २
उद्यामेषिरा ३ जाः पाऽ १ थू २। अहामिमानो ३ आक्तू ऽ १
— २ र १ २ — २
भा २ यिः। पश्यञ्जन्मानी ३ सूरा ऽ १ या २। अयुक्तसप्ता ३
१ २ — २ र र १ २ —
शुन्ध्यू ऽ १ वा ऽ २ः। सूरोरथस्या ३ नाप्त्रा ऽ १ या २ः।
२र र १ २ — २ र १ २
ताभिर्याति स्वा ३ युक्ता ऽ १ यिभी २ः। सप्तत्वाहरी ३ तोरा
— र १ २ — २र र
ऽ१ था २ यि। वहन्ति देवा ३ सूरा ऽ १ या २। शोचिष्केशंवी

१ २ २१ र रै ३ २र ३र र
३ चाक्षा ऽ १ णा २३ । हाउ हाउ हाउ । सत्या ओवा । २ ।
३ २ ४ ३ १ १ १ १ १
सत्या ३ ओ ५ वा ६५६ । इ २३४५ ॥ १६ ॥
२र र रै ३ २र ३र र २ र १ २ र
हाउ हाउ हाउ। ऋता ओवा । ३ । दिदीहि विश्वतस्पृथुः ।
२ र र १ २ — २ र र १ २
उद्यामेषिरा ३ जाः पाऽ १ थू २ । अहामिमानो ३ आक्तू ऽ १
— २ र १ २ — २
भा २ यिः । पश्यञ्जन्मानी ३ सूरा ऽ १ या २ । अयुक्तसप्ता ३
१ २ — २ र र १ २ —
शुन्ध्यू ऽ १ वा ऽ २ः । सूरोरथस्या ३ नाप्त्रा ऽ १ या २ः ।
२र र १ २ — २ र १ २
ताभिर्याति स्वा ३ युक्ता ऽ १ यिभि २ ः । सप्तत्वाहरी ३ तोरा
— २ १ २ — २र र
ऽ १ था २ यि । वहन्ति देवा ३ सूरा ऽ १ या २ । शोचिष्केशंवी
१ २ २र र रै ३ २र ३र र
३ चाक्षा ऽ १ णा २३ । हाउ हाउ हाउ । ऋता ओवा । २ ।
२ ३ ४ ३ १ १ १ १ १
ऋता ३ ओ ऽ ५ वा ६५६ । इ २३४५ ॥ १७ ॥
१ १ २र १ २र १र २र १र २र १ २ १र २ १ २
वाक् । मनः प्राणः प्राणो ऽपानो व्यानश्चक्षुः श्रोत्रं ॐ शर्म-
१ २ १र २ १र २र १ १
वर्म भूतिः प्रतिष्ठा । आदित्यः पित्र्यम् ।३। आयुःपित्र्यम् ॥३॥१८॥
२ र र १ २ — २
अन्तर्देवेषु ३ रोचा १ सा २ यि । ३ । अन्तश्चरती ३
१ २ — २ र र १ २ — २
रोचा १ ना २ । अस्य प्राणादा ३ पाना १ ता २ यि । व्यख्य-
१ २ — २ र र १ २ —
न्महो ३ षोदा १ यिवा २ म् । अन्तर्देवेषु ३ रोचा १ सा २ यि
२ र र १ १ ^ ३ ५र र
। २ । अन्तर्देवेषू ३ रो २३ । चा २ । सा २३४ । औहोवा ।
२ २र १र र र ३ १ १ १ १
ए ३ । देवादिवाज्योती २३४५ः ॥ १९ ॥
२र र र र १ र २ २र १ र २ १
हाउ हाउ हाउ । भ्राजाभ्राज । ३ । आयुरायुः । ३ । उदु-

त्यञ्जा । ३ । तवेदमम् । ३ । चित्रन्देवानामुदगादनी २३ का ३
म् । हाउ । ३ । भ्राजा भ्राज । ३ । आयुरायुः । ३ । देवं
वहा । ३ । चक्षुर्मित्रस्य वरुणास्यआ २३ ग्ना ३ यिः । हाउ ।३।
भ्राजाभ्राज । ३ । आयुरायुः । ३ । तिकेतवः । ३ । आप्राद्यावा
पृथिवी आन्तरी २३ क्षा ३ म् । हाउ । ३ । भ्राजाभ्राज । ३ ।
आयुरायुः । ३ । दृशे विश्वा । ३ । सूर्य आत्मा जगतस्तास्थुषा
२३ श्चा ३ । हाउ । ३ । भ्राजाभ्राज । ३ । आयुरायुः । ३ ।
यसूर्यम् । ३ । यसू २३ रियाउ । वा ३ । ए ३ । देवा दिवाज्योती
२३४५ः ॥ २० ॥

हाउ हाउ हाउ । भ्राजाओवा । ३ । उदुत्यञ्जा । ३ । हाउ
३ वा । आर्चिः । इन्द्रन्नरो नेमधिताहवा २३ न्ता ३ यि । हाउ
हाउ हाउ । भ्राजाओवा ।३। तवेदमम् । ३ । हा ऽ उ ३ वा ।
शोचिः । हाउ हाउ हाउ । भ्राजा ओवा । ३ । देवंवहा । ३ ।
हा ऽ उ ३ वा । तापः । यत्पार्यायुनजतायिधिया २३ स्ता
३ः । हाउ हाउ हाउ । भ्राजा ओवा । ३ । तिकेतवः । ३ ।
हा ऽ उ ३ वा । हारः । हाउ हाउ हाउ । भ्राजा ओवा । ३ ।
दृशेविश्वा । ३ । हा ऽ उ ३ वा । साहः । शूरोनृषा ताश्रवसा-
श्चक २३ मा ३ यि । हाउ हाउ हाउ । भ्राजा ओवा । ३ ।

२ र २ऽ १ २ २र र २ ३र २र
यस्सूर्यम् । ३ । हा ऽ उ ३ वा । नारः । हाउ हाउ हाउ । भ्राजा
३र र २ र र २ऽ — १र र
ओवा । ३ । दृशोविश्वा । ३ । हा ऽ उ ३ वा । भा २ ः । आगो
र र ७ र २र र २ ३र २र
मति व्रजेभ जातुवा २३ म्ना ३ ः । हाउ हाउ हाउ । भ्राजा
३र र २ र २ऽ ३ १ १ १ १
ओवा । ३ । यस्सूर्यम् । ३ । हा ऽ उ ३ वा ३ । इ २३४५ ॥२१॥

ततः सन्त्वा भूतानीत्यारभ्य उन्नयामीति यावत्पठनीयानि ।

इति मध्याह्नसन्ध्याप्रयोगः ॥

## अथ क्रमप्राप्तो ब्रह्मयज्ञप्रयोगः ।

पादौ हस्तौ प्रक्षाल्य, द्विराचम्य, प्रागग्रेषु दर्भेषु प्राङ्मुख आसीनो दर्भपाणिर्देशकालौ सङ्कीर्त्य 'परमेश्वरप्रीतये ब्रह्मयज्ञमहं करिष्ये' इति सङ्कल्प्य, हस्तौ गोकर्णाकृतिवज्जान्वोरुपरि विन्यस्य, मस्तकादीन्यङ्गान्यकम्पयंस्तन्मनस्को ऋषिच्छन्दोदेवताब्राह्मणान्संस्मृत्य, प्रणवव्याहृतिगायत्रीं आदौ पठित्वा, दक्षहस्ताङ्गुलीनां मध्यमपर्वसु स्वरोच्चारणसमये अङ्गुष्ठं योजयन्, दीर्घाक्षरं सव्यहस्ताङ्गुलिग्रहणेन दर्शयन्, हस्ताग्रकृतदृष्टिः सामसु अङ्गुष्ठतर्जन्योर्यवान्तरं; संहितायां तिलान्तरं कुर्वन्स्पष्टाक्षरं मध्यमवृत्त्या मध्यमस्वरेण एकया वृत्त्या शक्त्या पठेत् । पुनः प्रणवव्याहृतिसावित्रीं पठित्वा 'ॐ नमो ब्रह्मणे' इति त्रिरुक्त्वा समापयेत् । ततो रुद्रसंहितामुपतिष्ठेत् । ब्रह्मयज्ञादर्वाग्वा । अस्य मूलवाक्यानि नारदोक्तशिक्षायां द्रष्टव्यानि ।

इति ब्रह्मयज्ञः ।

## अथ पञ्च महायज्ञाः ।

तत्र प्रातर्होमोत्तरं पाकार्थमावसथ्याग्नेरेकदेशं गृहीत्वा,

पाकशालास्थचुल्ल्यां संस्थाप्य, पाकं कृत्वा, पुनस्तावदेव ततः समादाय शालाग्नौ प्रक्षिपेत् । पश्चाद्वैश्वदेवः ।

अथ वैश्वदेवः ।

तत्रासादनक्रमः । स्वदक्षिणे शुद्धोदकपात्रम् । उत्तरतोऽग्नेरपाम्पूर्णश्चमसः । ओदनादि हविष्यं घृतादिसिक्तं स्वपुरतः । समिद्द्वयञ्च । एवमासाद्याचम्य प्राणानायम्य, गायत्र्याभिमन्त्रितोदकेन हौमीयं संप्रोक्ष्य, देशकालौ सङ्कीर्त्य 'ममात्मसंस्कारार्थं श्रीपरमेश्वरप्रीतये नित्यविधिरूपं वैश्वदेवाख्यं कर्माहं करिष्ये' इति सङ्कल्प्य, भूतमिति ब्रूहीति पत्नीं प्रति ब्रूयात् । असन्निहितायां पत्न्यामन्यां वा । ततः पत्नी क्षालितकरचरणा भक्तियुक्तया वाचा भूतमिति प्रतिब्रूयात् । ततः स्वयं ओमित्युच्चैस्तस्मै नमस्तन्मारुया इति उपांशु ब्रूयात् ।

अथ होमादि बलिदानान्तं वाग्यतः स्यात् । ततो दक्षिणं जान्वाच्य, यथाविधिना भूजप-पर्युक्षण-समिद्धोमादीन्विधाय, प्रजापतये स्वाहेति मनसा मध्येऽग्नौ हुत्वा, मनसैवं त्यागं विधाय, अग्नये स्विष्टकृते स्वाहेति ऐशान्यां हुत्वा, इदमग्नये स्विष्टकृते न ममेति त्यागं विधाय, समिद्धोमानुपर्युक्षणप्रसेकादीन्विधायाग्निं परिक्रम्य, चमसं निनीयाद्भिः पुनः पूरयेत् । ततो हुतशेषेण बलिदानम् । कुण्डसमीपे संमार्जनादिसंस्कृते भूप्रदेशे दक्षिणहस्तेन चमसस्थं जलमादाय, प्राक्संस्थधारां दत्वा बलिचतुष्टयपर्याप्तमन्नमादाय—

'ॐ पृथिव्यै नम' इदं पृथिव्यै न ममेति त्यागः । 'ॐ वायवे नम' इति तत्पूर्वस्यां, वायवे न मम । 'ॐ विश्वेभ्यो देवेभ्यो नम' इदं विश्वेभ्यो देवेभ्यो न मम । 'ॐ प्रजापतये नमः' इदं प्रजापतये न मम । मानसोऽयं बलिस्त्यागश्च ।

एवमेकपङ्क्त्या प्राक्संस्थं बलिचतुष्टयं दत्वा, तदुपरि पूर्व-

ञ्जलं सिञ्चेत्। ततस्तदुत्तरस्यां पूर्ववज्जलमासिच्य तावदेवान्न-मादाय तथैव बलिदानम्।

ॐ अद्भ्यो नमः। इदं अद्भ्यो न मम। ॐ ओषधिवनस्प-तिभ्यो नमः। इदमोषधिवनस्पतिभ्यो न मम। ॐ आकाशाय नमः। इदमाकाशाय न मम। ॐ कामाय नमः। इदं कामाय न मम। पुनस्तथैवोपरि सेकः।

पुनस्तदुत्तरतः जलमासिच्य, तावदेवान्नं आदाय तथैव बलिदानम्। ॐ मन्यवे नमः। इदं मन्यवे न मम। ॐ इन्द्राय नमः। इदं इन्द्राय न मम। ॐ वासुकये नमः। इदं वासुकये न मम। ॐ ब्रह्मणे नमः। इदं ब्रह्मणे न मम। ततस्तदुपरि पूर्ववज्जलासेकः।

ततस्तदुत्तरस्यां किञ्चिज्जलमासिच्य 'ॐ रक्षोजनेभ्यो नम' इदं रक्षोजनेभ्यो न मम। इति बलिदानम्। ततस्तदुपरि जलमा-सिच्य उदकं स्पृशेत्।

ततो बलिशेषमन्नं जलेनाभ्युक्ष्य, कृतापसव्यः सव्यं जान्वा-च्य, सर्वेषां दक्षिणतो जलमासिच्य 'ॐ पितृभ्यः स्वधा' इति पितृतीर्थेन बलिदानम्। इदं पितृभ्यो न मम। ततस्तदुपरि जल-मासिच्य उदकं स्पृशेत्।

ततः सर्वेषामुत्तरतो 'ॐ यवेभ्यो नम' इति यवाग्रयणोत्तर-माव्रीह्याग्रयणं यावत्। व्रीह्याग्रयणोत्तरं 'ॐ व्रीहिभ्यो नम' इति आयवाग्रयणं तथैव त्यागः। स्वकर्तृकोऽयं बलिः। प्रवासादा-वेतस्य लोपः। ततः कृताञ्जलिपुटोऽग्निं प्रार्थयेत्।

आरोग्यमायुरैश्वर्यं धीर्धृतिः शं बलं यशः।
ओजो वर्चः पशून् वीर्यं ब्रह्म ब्राह्मण्यमेव च।
सौभाग्यं कर्मसिद्धिश्च कुलज्यैष्ठ्यं सुकर्तृताम्।
सर्वमेतत्सर्वसाक्षिन् द्रविणोद रिरीहि णः॥

ततो वामदेव्यं गीत्वा चतुर्भिश्चेत्यग्निं प्रणमेत् ॥

इति वैश्वदेवः ।

## अथ नित्यश्राद्धम् ।

आचम्य प्राणानायम्य, देशकालौ सङ्कीर्त्यापसव्यं कृत्वा 'गोत्राणां पितृपितामहप्रपितामहानां अमुकामुकामुकशर्मणां, मातामहप्रमातामहवृद्धप्रमातामहानां अमुकामुकामुकशर्मणां पितृयज्ञसिद्धये नित्यश्राद्धमहं करिष्ये' इति सङ्कल्प्य, उदङ्मुखान् ब्राह्मणान्ब्राह्मणं वा उपवेश्य, द्विगुणभुग्नकुशसहितं तिलोदकमादाय 'अमुकगोत्राः अस्मत्पितृपितामहप्रपितामहाः अमुकामुकामुकशर्माणः एतद्वः पाद्यं' इत्युक्त्वा, पितृतीर्थेन ब्राह्मणस्य पादयोर्निःक्षिपेत् । मातामहादीनां द्वितीयश्चेत्तदा पृथक्तेभ्यो देयमेकश्चेत्तन्त्रेण ।

तत आसनम् । अमुकगोत्रेभ्योऽस्मत्पित्रादीनुच्चार्य, मातामहादीनामपि नामगोत्रादूयुच्चार्य 'अमुकशर्मभ्य इदमासनं स्वधा' इत्युक्त्वा जलं दक्षिणहस्ते दत्वा, विप्रवामभागे द्विगुणदर्भसतिलकुशासनं दद्यात् ।

ततश्चन्दनेन मूर्द्धांसजानुपादेषु वामाङ्गादि विष्णुमन्त्रेण सम्पूज्यार्चनसङ्कल्प कुर्यात् । 'यथादत्तं गन्धाद्यर्चनं गोत्रेभ्योऽस्मत्पित्रादूयुच्चार्य अमुकशर्मभ्यो यथायथाविभागं वः स्वधे'त्युक्त्वा जलं दद्यात् ।

ततो भोजनार्थं पात्रेऽन्नं परिविष्य 'सत्यं त्वर्तेन परिषिञ्चामीति' अभिषिञ्च्य 'ॐ पृथिवी ते पात्रं' इत्यादि विष्णुमन्त्रान्तमुच्चार्य 'इदमन्नादि यद्दत्तं यच्च दास्यामि तत्सर्वं तृप्तिपर्यन्तं भोजनं गोत्रेभ्य' इत्याद्यभिधाय अमुकामुकामुकशर्मभ्यो यथायथाविभागं वः स्वधेत्युक्त्वोदकं भुव्युत्सृजेत् । ततो भोजयित्वा, किञ्चित्फलं काकिणीं वा दत्वा नमस्कुर्यात् । अन्नसङ्कल्पान्तं नित्यश्राद्धम् ।

इति नित्यश्राद्धम् ।

अथ मनुष्ययज्ञः ॥

आचम्य प्राणानायम्य । देशकालौ सङ्कीर्त्य, स्नानान्तं विधाय 'श्रीपरमेश्वरप्रीतये नित्यविधिरूपं मनुष्ययज्ञमहं करिष्ये' इति सङ्कल्प्य, आगतमतिथिं पाद्यादिभिः सम्पूज्यान्नं परिविष्य, सकुशजलमादाय निवीती 'इदं अन्नादि यद्दत्तं तृप्तिपर्यन्तं दास्यमानञ्च सनकादिमनुष्येभ्यो हन्तेत्युच्चार्य' प्रजापतितीर्थेन जलमुत्सृजेत् ।

एवं पितृयज्ञमनुष्ययज्ञकरणासमर्थेन भिक्षा–पुष्कल–हन्तकारादिशक्त्या अन्नमुद्धृत्य प्राचीनावीती सद्विगुणदर्भं जलमादाय 'पितृयज्ञसिद्ध्यर्थमिदमन्नं सार्द्धं पितृभ्यः स्वधेत्युच्चार्य' जलं क्षिप्त्वा, अवशिष्टस्यान्नस्यार्द्धभागं निवीती सनकादिमनुष्येभ्यो हन्तेत्युक्त्वा जलमुत्सृजेत् ।

इति मनुष्ययज्ञः ।

ततः 'सुरभ्यै नम' इति सुरभीं सम्पूज्य गोग्रासं दद्यात् ।

सुरभी वैष्णवी माता नित्यं विष्णुपदे स्थिता ।
गोग्रासन्तु मया दत्तं सुरभि प्रतिगृह्यताम् ॥

इति मन्त्रेण गोग्रासं दत्वा, गोभ्यो न ममेति त्यागः ।

ततः—

पिपीलिकाः कीटपतङ्गसङ्घा बुभुक्षिताः कर्मनिबन्धबद्धाः ।
प्रयान्तु ते तृप्तिमिदं मयान्नं तेभ्यो विसृष्टं सुखिनो भवन्तु ॥

इति मन्त्रेण सर्वभूतेभ्यो न ममेति सर्वभूतबलिं गृहाङ्गणे दद्यात् । ततः—

ऐन्द्रवारुणवायव्या याम्या वै नैर्ऋतास्तथा ।
वायसाः प्रतिगृह्णन्तु भूमौ पिण्डं मयार्पितम् ॥

इति वायसेभ्यो न ममेति वायसेभ्यो गृहाद्बहिर्बलिर्देयः । ततो—

द्वौ श्वानौ श्यामशबलौ वैवस्वतकुलोद्भवौ ।

ताभ्यां बलिं प्रदास्यामि रक्षेतां पथि मां सदा ॥

इति श्वभ्यामिदं न ममेति श्वबलिर्गृहाद्बहिर्देयः । ततः पादौ प्रक्षाल्याचम्य, बालादीन् भोजयित्वा स्वयं भुञ्जीत ।

इति गोग्रासादिबलिदानम् ।

## अथ भोजनप्रयोगः ।

सुप्रक्षालितपाणिपादमुख आचम्य, शुचौ संवृते देशे चतुरस्र-मण्डले सुपीठाद्यासने प्राङ्मुख उपविश्य, पात्रे परिवेषितमन्नं प्रणम्य, अस्माकं नित्यमस्त्वेतदिति सम्प्रार्थ्य, सव्याहृतिगायत्र्या तदन्नमभिमन्त्र्य जलेन 'ॐ सत्यं त्वर्तेन परिषिञ्चामीति' परिषिच्य, घृताक्तमन्नमादाय, स्वाग्रे दक्षिणभागे बलित्रयं प्राक्संस्थं दद्यात् ।

ॐ भूपतये नमः । ॐ भुवनपतये नमः । ॐ भूतानां पतये नमः ।

ततश्चतुर्थो विष्णवे बलिर्देय इति केचित् । ततो जल-मादाय 'ॐ अमृतोपस्तरणमसि स्वाहेति' मन्त्रेण जलं प्राश्य, गार्हपत्यादीनात्मनि विचिन्त्य, तर्जनीमध्यमाङ्गुष्ठैरन्नमादाय, ॐ प्राणाय स्वाहेति मुखे हुत्वा, मध्यमानामिकाङ्गुष्ठैर्व्यानाय स्वाहेति हुत्वा, कनिष्ठिकानामिकाङ्गुष्ठैः ॐ अपानाय स्वाहेति हुत्वा, सर्वाभिः सहाङ्गुष्ठैः ॐ समानाय स्वाहेति हुत्वा, तर्जनीं विना ॐ उदानाय स्वाहेति जुहुयात् । एतान्पञ्च ग्रासान्महामौनी दन्तैरखण्डयन्निगीर्य उदकं स्पृष्ट्वा, शिखां विमुच्यान्यदश्नीयात् । ततो भुक्त्वाऽवशिष्टादन्नमादाय—

रौरवे पुण्यनिलये पद्मार्बुदनिवासिनाम् ।
उच्छिष्टभागधेयानामक्षय्यमुपतिष्ठतु ॥

इति मन्त्रेणोच्छिष्टभागधेयेभ्योऽन्नं सोदकं भुवि दत्वा, अप्रक्षालितेनैव हस्तेन जलमादाय, ॐ अमृतापिधानमसि स्वाहेति

मन्त्रेणार्द्धं पीत्वाऽवशिष्टं पितृतीर्थेन भूमौ प्रक्षिप्य, मृज्जलाभ्यां हस्तौ मुखञ्च संशोध्याचम्य जलमादाय ।

ॐ अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठन्तु समाश्रितः ।
ईशः सर्वस्य जगतः प्रभुः प्रीणातु विश्वभुक् ॥

इति मन्त्रेण दक्षिणपादाङ्गुष्ठे स्नापयित्वा, अभीष्टदेवतां स्मरेत् ।

अगस्तिरग्निर्वडवानलश्च भुक्तं मयान्नं जरयन्त्वशेषम् ।
सुखञ्च मे तत्परिणामजं वै यच्छन्त्वरोगं मम वाऽस्तु देहे ॥
विष्णुरक्षा यथैवान्नं परिणामश्च वै यथा ।
सत्येन तेन यद्भुक्तं जीर्यत्वन्नमिदं तथा ॥
इत्युच्चार्य स्वहस्तेन परिमार्ज्यं तथोदरम् ।
अनायासप्रदायीनि कुर्यात्कर्माण्यतन्द्रितः ॥

इति भोजनप्रयोगः ।

अथ सायंसन्ध्या ।

ततः सायङ्कालेऽग्निं प्रादुष्कृत्य सायंसन्ध्यां कुर्यात् । तत्र सर्वं प्रातःसन्ध्यावत् । विशेषो यथा । 'सायंसन्ध्योपासनमहं करिष्ये' इति सङ्कल्पे । ध्यानावाहने विशेषः—

अपराह्ने तु या सन्ध्या कृष्णाङ्गी कृष्णवाससा ।
गरुडस्कन्धमारूढा तथा च विष्णुदैवता ।
वृद्धा सामवेदमुखी विष्णुना सह आवह ।
आयाहि वरदे देवि त्र्यक्षरे विष्णुवादिनि ।
सरस्वति च्छन्दसां मातर्विष्णुयोने नमोऽस्तु ते ॥

आचमने विशेषः । अग्निश्चमेति नारायण ऋषिः प्रकृतिच्छन्दः अग्निर्देवता आचमने विनियोगः ।

ॐ अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्ताम् । यदन्हा पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण

शिश्ना अहस्तदवलुम्पतु । यत्किञ्च दुरितं मयि इदमहं माममृत योनौ सत्ये ज्योतिषि जुहोमि स्वाहा ॥

ततो ऋतञ्च सत्यश्चेत्यनेनाघमर्षणानन्तरं उपविष्ट एवाञ्जलि-त्रयं गायत्र्या सूर्याभिमुखः क्षिपेत् । ततः सूर्यमुपस्थाय, सूर्याभिमुखो नासाग्रे अधोमुखधृतहस्तो मौनी गायत्रीं सञ्जप्य, सङ्कल्पं कुर्यात् । 'अनेन गायत्र्या मत्कृतेन जाप्येन विष्ण्वात्मा रविः प्रीयताम् । तत 'उत्तरे शिखरेति' विसृज्य सायंहोमं कुर्यात् ।

इति सायंसन्ध्या ।

## अथ सायंहोमः ।

तत्र सर्वं पूर्ववत् । तत्र न्यञ्जकरणे 'विदन्ते वसु' इति विशेषः । अग्नये स्वाहेति पूर्वाहुतिः । प्रजापतय इति उत्तरा ।

इति सायंहोमः ।

वैश्वदेवन्यञ्जकरणे एवमेव । ततः सामपठनम् । एषो उषेति उषा गायत्र्यश्विनौ, आबुन्द इति उषा गायत्रीन्द्रः, ऋजुनीतीति कुत्सो गायत्री विश्वेदेवाः, मत्युअदर्शीति उषा बृहत्युषा, उद्धेदभीति त्रयाणां सुपर्णो गायत्रीन्द्रः जपे विनियोगः । एवं ऋष्यादीन्संस्मृत्य सामानि पठेत् ।

५र र १ र २ र १ २ १ २
ॐ एषो उषाः । आपूर्विया । व्युच्छति । होवा ३ हायि ।
१र २ ३ २ ३र २ २ १
प्रियादा २३ यिवा ३४ः । स्तुषा ३४ यिवामा ३ । श्विनो २३४
५ ४ ५
वा । बृ ५ हो ६ हायि ॥ १ ॥
६र र २र १ १ २ १
आबुन्दंहृ । त्रहाद । दायि । जातः पृच्छा ३ त् । विमा २
३ ५ २१ २ १ २र १ २
ता २३४ राम् । कउग्रा २३ः के । हा श्रृण्विरे । इडा २३ भा
१
३४३ । ओ २३४५ इ । डा ॥ २ ॥

५ २ ४५४ ५ ४ २ १र २ १ २
ऋजुनीतीनोवरुणः । इहा । मित्रो नयतिविद्वा २३ न्सः ।
१ २ २ १र २ १ २ १ २ २ २
इहा । अर्यमादा २३ यिवायि । इहा । सजोषा ३ उवा ३ । ई
५
३४ हा ॥ ३ ॥
२ऽ २ १ २र २ २ २ २ २
प्रात्युवदश्शर्यायतोवा । ऊच्छन्ती दुहिता दिवो अपो मही वृणुते
१ २ १ २ १ ४ १ २
च ।क्षुषा २३ तमाः । ज्योतिष्कृणो २३ ती ३ । सूना २३४ रा ।
२ ५ ५ २ र १ १ २ २ २ २ २ २
ओवा ६ । हाउवा ॥ ज्योतोवा । कार्णोति सूनरी उदुस्रियाः सृजते
२ १ २ १ २ १ ४ १
सू । रिया २३ः स चा । उद्यन्नक्षा २३ त्राइम् । आर्चा
२ २ ५ ५ २ १ २ २
२३४ इवात् । ओवा ६ । हाउवा ॥ ज्योवा । नाक्षत्रमर्चिवत्तवे
२ २ १ २ १ २र १ ४
दुषो वियुषि सू । रिया २३ स्यचा । साम्भक्तेना २३ गा ३ ।
१ २ २५ ५ १
माइमा २३४ हा । ओवा ६ । हाउवा । अस् ॥ ४ ॥
५र ४ ५ १ २^३ ५ २१२ १ ७ ^
उद्घेदभ्योवा । श्रूतामा २३४ घाम् । वृषाभन्ना । रिया २
३ ५ — १ २ १ २र १ २
पा २३४ साम् । आ २ स्ता । रा २३ मे । पायि सूरिया । औ
४ ५ ४
३ होवा । हो ५ इ । डा ॥ ५ ॥
५ २ २ ५ ४ ३ ४ ५ १ २
उद्घेदभिश्रुतामा ६ घाम् । वृषभन्नर्या । हुम् । पा २३४
५ १ २ २ २र १ २ १ ५ ४
साम्। आस्ता ३ उवा । रामायि । चिसू २३४ वा । रा ६ यो
५
६ हायि ॥ ६ ॥
४ २५ ४ ५४र ५ ४५४ ५ ५ ४ ३४५र २ २
उद्घेदभिश्रुता मघम् । इय इयाहायि । वृषभन्नर्या । हा ३ हा
१ ५ १ २ २ १ ^ ३
३ यि । पा २३४ साम् । आस्ता ३ उवा ३ । रा २ मा २३४

५२ २ २ १२ ३ १११ १
औहोवा । पिस्लरिया २३४५ ॥ ७ ॥

ततः रात्रिभोजने 'ऋतं त्वा सत्येन परिषिञ्चामीति' अन्नप्रोक्षणे विशेषः । रात्रौ दत्ते सर्वेभ्योऽन्ने फलीकरणकुक्कुसा ओदनास्रावणं जलञ्च एकीकृत्य 'ॐ रुद्राय नमः' इति सुप्रदेशे वलिर्देयः । रुद्राय न ममेति त्यागं विधाय, उदकं स्पृशेत् । ततः शयनम् ।

इति श्रीशुक्लविश्रामात्मज–शिवरामविरचितायां गोभिलगृह्यपद्धतौ सुबोधिन्यां द्वितीयस्य आह्निकप्रकाशस्य प्रयोगपद्धतिः समाप्ता ॥

---

## अथ तृतीयः प्रकाशः ।

### अथ पर्वाहकृत्यप्रयोगः ॥

प्रातर्होमोत्तरं पूर्वाण्ह एव अग्नेः स्थण्डिलं गोमयोदकाभ्यां सर्वत उपलिप्य, अग्निसमीपे प्रातः करिष्यमाणयागार्थं द्रव्याण्यासादयेत् । तानि यथा–अष्टादशेध्मकाष्ठानि । विशाखाच्छिन्नमुष्टित्रयं पञ्चकं वा बर्हिः । घृतम् । स्थालीपाकपर्याप्ता व्रीहयः, यवा वा । चरुस्थाली । मेक्षणम् । स्रुक्स्रुवौ । अनुगुप्ता आपः । उलूखलमुसले । कंसपात्रम् । शूर्पम् । पवित्रद्वयम् । समित्त्रयम् । पूर्णपात्रादीनि । एतान्यासाद्यापराण्हे स्नात्वा, माध्याह्निकं निर्वर्त्य, वैश्वदेवं कृत्वा, दर्शश्चेत्पिण्डपितृयज्ञं कुर्यात् ।

अग्नेः पश्चात्प्राङ्मुख उपविश्याचम्य प्राणमायम्य देशकालौ सङ्कीर्त्य 'पितृतृप्तिद्वारा श्रीपरमेश्वरप्रीतये पिण्डपितृयज्ञमहं करिष्य' इति सङ्कल्प्य प्राचीनावीतिना पश्चादग्नेर्दक्षिणासंस्थं पात्राण्यासादयेत् । सहविः शूर्पम् । उलूखलमुसले । चरुस्थाली । पवित्रम् । उदकपात्रम् । मेक्षणम् । स्रुवः । आज्यम् । शङ्कुः । कुशमुष्टिद्वयम् । तत्रैकं मूललूनम् । विशाखलूनमपरम् । कंसपात्रम् ।

